# व्यासशिक्षा

## संज्ञाप्रकरणम् १

श्रीवासुदेवं वरदं प्रणम्य श्रीमद्गणेशं वचसाञ्च देवीम् १
शिक्षां प्रवक्ष्ये श्रुतिकारणाङ्गं सुबोधकं लक्षणशीर्षभूषाम् २
अथ स्वरादिसंज्ञाश्च तत्प्रयोजनमेव हि ३
तत्फलञ्च प्रवक्ष्यामि विदुषां प्रमुदे यथा ४
अवर्णोवर्णकोवर्णा ऋवर्णो लृत्वमेत्वमैत् ५
ओदौद्रङ्गौ क्रमादोम्योत्स्वरास्स्युर्व्यञ्जनान्यथ ६
कादिमान्तास्स्मृतास्स्पर्शा अन्तस्था यादिवोत्तराः ७
जिह्वामूलादिहान्ताश्च षडूष्माण उदीरिताः ८
स्पर्शानां पञ्च पञ्च स्युर्वर्गा वर्गोत्तरस्य च ९
तत्प्रथमादिसंज्ञास्स्युः पञ्चमस्योत्तमः क्रमात् १०
अघोषास्स्युर्विसर्गोष्मद्वितीयप्रथमा न हः ११
गजडाद्या दबाद्याश्च घोषवन्तः परे हलः १२
सविशेषस्तु यस्तस्य ज्ञेयं वर्णान्तरं बुधैः १३
तुल्यरूपं सवर्णं स्याल्लोपस्स्यादप्रदर्शनम् १४
ऋवर्णस्य लृकारस्य पृक्तसंज्ञा प्रकीर्तिता १५
अवसानेऽन्त्यवर्णाश्च नादा इति बुधैस्स्मृताः १६
आख्यानेकस्य वर्णोर्ध्वः स्वरस्य कारतोत्तरः १७
भवेदकारकारोद्ध्वर्वो हलामत्तु र एफगः १८
अदन्तं ग्रहणं वा स्यात्सन्देहे सन्निधिं त्वपि १९
निर्देशाः कारमुख्याश्चान्वादेशावपि चेत्यधः २०
त्वथैवेति निवृत्तिस्थो ह्यधिकारोऽवधारकः २१
अनमाना निषेधे स्युर्वेति वैभाषिको भवेत् २२
सम्मिश्रस्स्याद्यदेकत्वं सम्बन्धः श्रवणे द्वयोः २३
अनेकव्यञ्जनश्लिष्टस्संयोगश्च प्रकीर्तितः २४
वर्णाभावो विरामश्चावसानं सार्धमात्रिकः २५

नानापदवदिङ्ग्यञ्चासङ्ख्याने चाद्यवग्रहः २६
वेदभागः कमेरौव स चार्षः कथ्यते बुधैः २७
उच्छ्वासेऽनवसाना स्यात्संहिता चान्तगं पदम् २८
पदवर्णस्वराङ्गानां द्विर्द्विर्युक्ते च संहिता २९
द्विधादिसंहिता ह्यत्र पञ्चैवं संहितास्स्मृताः ३०
पदवत्संहिता यत्र न कार्यं सांहितं यदि ३१
विज्ञेया प्रकृतिस्तस्या ज्ञानादेव फलं लभेत् ३२
संहितावत्क्रमो ज्ञेयो द्वितीयं पदवद् द्वयोः ३३
इतिगन्त्वादि चेदुक्त्वा द्वितीयं चोत्तरं तथा ३४
आदन्तन्तु यदुञ्चान्तमोपसर्गपरं यदि ३५
परेण त्रिक्रमस्स्याद्धिषु पदं नः परन्त्वधः ३६
सकृदादि द्वितीयं द्विः पठेच्चादिपदं सकृत् ३७
सन्धितः क्रमवच्चेति प्रोच्यते सा जटा बुधैः ३८
त्रिक्रमस्य जटा ज्ञेया ह्युक्त्वा पूर्वं क्रमं तथा ३९
पुनरन्तं मध्यमादि पुनराद्यन्तरं परम् ४०
अनुलोमस्स्वपाठस्स्याद्विलोमस्सन्धिनिर्मितः ४१
पदं पदं पठेत्ताभ्यां त्रिवारञ्चोर्ध्वतः पुनः ४२
प्रोपावापर्यधिव्युत्सुन्यन्वपाप्यत्यभि प्रति ४३
परानिस्सं नव दशाप्युपसर्गाः स्युरत्र हि ४४
इति संज्ञाप्रकरणम् १

## अथ प्रग्रहप्रकरणम् २

अथ प्रग्रह एवान्त उच्यतेऽवग्रहो न चेत् ४५
ऊकारः स्थित ओकारोऽप्यकारव्यञ्जनोत्तरः ४६
स म ह द थ पित्पूर्वो नित्योऽथेदेत् पतीश्रुतिः ४७
कार्ष्णी धी चक्षुषी मुष्टी देवता फल्गुनी अमी ४८
अहनी श्रपणी हूती सुम्निनी सामनी हरी ४९

कल्पयन्ती तपसी नाभ्यैद्वव्यापृषती हुरी ५०
रिष्यन्ती वाससी दर्वी नः पृथिवी व्यचस्वती ५१
जन्मनी वैष्णवी द्यावापृथिवी आहुती कृतौ ५२
रोदसी चोत्तरः पान्यपरो न्वती च ची प्र यत् ५३
न ह्यन्योर्द्ध्वौ समीची ग्री घ्नी चक्रे पोर्द्ध्व आन्मही ५४
ऊर्द्ध्वे शाखे धृते शृङ्गे एने मेध्ये च देवते ५५
पार्श्वे एवोत्तरे अक्ते तृणे तृद्ये कनीनिके ५६
शिप्रे रथन्तरे शस्त्रेऽहोरात्रे चोत्तमे उभे ५७
सामे सदोहविर्द्धाने वजेऽधिषवणे शिवे ५८
विषुरस्य विरूपे च दृढे ध्वंसदने हुले ५९
अर्पिते रैवते पूर्ते भागधे च धृतव्रते ६०
अच्छिद्रेऽनृते प्रत्ते अस्मे त्वे इत्यनिङ्ग्यगम् ६१
एते वैसं हि तन्वेव यज्ञष्टक् पत्परो द्वयोः ६२
द्वे परश्चैकव्यवेतः कृष्णा वीड्द्वार्यदा चराव् ६३
स्थः परः पूर्वतो वापि ईदेकारोऽन्त एव च ६४
बहुस्वरस्य ते थे च आकारैकारपूर्वकः ६५
पूर्णे ब्रह्मजेमे आपस्सजूः क्रूरं तथैषु च ६६
एव रसेन गर्भञ्च उपोत्तर इमे तथा ६७
ते तूपाहर्नमो गर्भं वायुर्मापैनमभ्यधः ६८
ते अस्याचर्क्छन्दस्वोर्वी येऽप्र यङ्‍ क्रान्तरासु च ६९
सोमाय स्वेति चैतस्मिन्वरी इत्याद्ययं परः ७०
इरावती प्रभृत्यैव दाधारान्तस्तथैव च ७१
कुर्यादिष्टिष्वग्निं गानूद्धवतोऽवान्तराकरोत् ७२
आस्तां गमयतोऽब्रूतां स्तभ्नीतां बिभृतस्त च ७३
वाचयत्यप्युभाभ्याञ्च ताभ्यामेव तनू यदा ७४
प्रवर्तपर आषष्ठात्सदा प्रग्रहकार्यभाक् ७५
नातेऽवेऽन्हे धत्तेर्याति ग्रामी ज्ञे वर्चसी थुनी ७६

लोके रुन्धे मासे नित्यं पस्थे नीचस्त उर्वशी ७७
प्रग्रहेङ्ग्योपसर्गान्त इति स्यादप्यसांहिते ७८
पुनस्त्विङ्ग्यं क्रमे चादिर्विरामस्थं द्विधैक्यतः ७९
नोपसर्गोऽवसानस्थो निहतश्च द्वयोरधः ८०
अवानस्त्रिषु मध्यस्थोऽवग्रहो न क्रमे तु च ८१
इति प्रग्रहप्रकरणम् २

अथ परिभाषाप्रकरणम् ३

अथेयात्संहितायां यत्कार्यञ्चेत्सनिमित्तकम् ८२
विकृतञ्च पदेऽदाद्यनाद्यनुस्वारयुक्पदम् ८३
ह्रस्वस्यानित्यदीर्घं स्यात्तद्वास्याप्युपलक्षणम् ८४
पूर्वं पूर्वन्तु तत्रैव कर्तव्यं प्रथमं यथा ८५
सामान्योक्तस्तु सर्वत्र विशेषो नैव दृश्यते ८६
तयोरेकत्र चाल्पस्थो विशेषो बलवान् स्मृतः ८७
पुनरुक्तं यतः पञ्चपदमित्युत्तरञ्च वा ८८
पूर्ववद्भवति ज्ञेयं सर्वत्रापि विचक्षणैः ८९
परि त्वा पुनरूर्जा यन्नोऽस्यारातीयतोऽपि च ९०
सप्त तेऽपो अनु त्वग्ने त्वङ्गेमांश्चाधि रोचने ९१
चित्रं च भवतं द्रप्सस्सहस्व पुनरैक्यतः ९२
आयुर्यज्ञेन वाजश्च प्राणम्म आयुरेव च ९३
पवस्व व्रतपास्सूर्ये परोऽग्न आदयः पुनः ९४
येनाग्नेऽस्मिन् सधस्थे च वाज्यध्वनस्त्वनैक्यतः ९५
एदोद्भ्यां वक्ष्यतेऽतश्च यदनेकपदे पुनः ९६
जटोच्यतेऽन्यशब्देन तत्रानैक्यं न विद्यते ९७
ग्रहणन्त्वेकमुद्दिश्य पदं वै क्रियते यतः ९८
तदन्यत्र तु न ग्राह्यं यज्जटाभिमतैरिति ९९
संहितावत्क्रमो ज्ञेयो जटा च विकृतादिषु १००
आर्षे तूक्तं मुखेऽन्ते चान्यत्स्यादुभयत्र हि १०१

इति परिभाषाप्रकरणम् ३

अथ दीर्घप्रकरणम् ४

अथादावन्त आर्षे तु ह्रस्वो दीर्घं भजेद्धलि १०२
सदेङ्गचे तु व्यानोदानशब्दयोस्तु सुबन्तयोः १०३
लोक एवेष्ट चाद्याश्वात्तस्य देवा यते युवम् १०४
वयुना हृदयाश्वा विद्वर्षाह्नामुत्तरस्तथा १०५
चित्रर्तावयवातत्वद्रविणप्रस्थभङ्गुर १०६
पुष्पष्णियर्णकशक्तिश्वदेव्यविषुचेन्द्रिय १०७
वीर्याश्ववद्वन्वानूर्ध्वो वनान्योर्ध्वेषु चेन्द्रचेत् १०८
सत्राज्युक्थायुमत्सुम्ना यन् सुगोपरथीतम १०९
स्वाधियं धी रुहं राज्यं परो दीर्घाधियः परः ११०
शीक शुद्ध च मेघाघ वसु शत्रु च योत्तरः १११
विश्वाराड्वसुमित्रापि साह हा पुषवत्परः ११२
परी णसमधी वासं प्रावणेभिस्सहोत्तरः ११३
रात्र्योषध्याहुति श्रोणि चिति व्याहृति पृष्टि चेत् ११४
स्वाहाकृति शच्यृक्साम हनुह्रादुनि भोत्तरः ११५
चर्षणी धृत्पारीण् पूती गाभीवृत्सह सूयव ११६
त्विषि वाशिम्यनूब्याज्ञात् काश्विभूदाववग्रहः ११७
ऋृत्त्वथा तेस्वयं धत्तं सपत्नान्नो रयिं भव ११८
देवानां शतसोमस्य जीवो यूयं पितृन् परः ११९
अधा ते च यथा ह्यूद्धर्वस्तिष्ठादेवशरीर चेत् १२०
अच्छा वोचो जिगा नक्षि पितर्देवान्नियुद्वद १२१
चकृमा सुजुषध्वं कद्वयं दैव्येऽत्र पूष्ण ते १२२
सृजा ररा दृतिं वृष्टिं सं रक्षा माकिराज च १२३
भवा तोकाय नस्त्वं पा वाज्यत्रा ते नियुन्नरः १२४
ससादा पिद्यजी मुञ्चा विस्वस्त शिक्षनस्सखि १२५
क्षामा रेभिरु घा स्यालात्सत्यं मृडा जरित्र नः १२६

धारया रयिं वसूनि मय्यवता हवे वचः १२७
विद्मा ते तं हि बोधा सनोऽद्या देवान् हुवे च वृण् १२८
भरता वस् बृहज्ञातवर्धया त्वं रयिं परः १२९
सचस्व नुद वर्धावा नोऽत्तधामाह ना ह दे १३०
युद्दव स्वेन जनिष्वा हि मधूर्ध्वस्सिञ्चथोन्नत १३१
घुष्याश्वस्य वि पाथा दिवारिथामुञ्चता यज १३२
पिबा चरा सोम हिष्ठाम् वर्तयर्ष यथा पु चेत् १३३
जनयथा च दीयार ऋध्यामा ते हरा नि चेत् १३४
तत्रा रथं जयता नरू कुत्राचिद्य तरा मृधः १३५
याता हिर पृणस्वा घृते भरा दद्धयपा वृधि १३६
वोचता मेऽनदता हद्येना सहस् चृता बचेत् १३७
भजा त्वं जनया दैव्यं दक्षिणेना वसून्यपि १३८
रुहेमा स्व स्तरीमाजु भवता मृड धर्ष मान् १३९
बिभृता स्वीरयथा मरु भरेमा मनीष चेत् १४०
हन्तना तं जगामा परस्याश्चेत्तपता सुवृक् १४१
जुहुता विश्व तरता रजांसि शृणुता हवम् १४२
पारया नव्यस्सादया यज्ञञ्चेत्कृणुता बृहत् १४३
क्रयी पोश्मसी ग यदी भू कृधी स्वस् श्रुधी हवम् १४४
मोष्वा तु नू रणे मन्नू दे थू करूशु बल् सु नु १४५
इति व्यञ्जनपरदीर्घप्रकरणम् ४

आगमप्रकरणम् ५

आगमस्त्रपुपूर्वः स्यान्मिथ्वधश्शोऽपि चोत्तरः १४६
सु पूर्वश्शोऽपि चन्द्रोर्ध्वस्सम्पूर्वस्सः कुरूत्तरः १४७
समपूर्वश्च कुर्वोर्ध्वो नीचापूर्वो द उच्परः १४८
ङपूर्वः कस्सषोद्धर्वश्चेट्टनपूर्वश्च तो भवेत् १४९
इति आगमप्रकरणम् ५

## लोपप्रकरणम् ६

लोपो विसर्गस्सोऽनिङ्क्यस्स्य उञ्चोऽथैष चेद्धलि १५०
एनौषधीरिद्विदग्न इमान्नः परतश्च सः १५१
मकारः पदमीं पूर्वश्चादौ व उञ्चतुन्वधः १५२
मश्चावग्रह इत्येकं या तिष्ठन्त्येकयोर्ध्वतः १५३
रेफोष्मोर्ध्वोऽन्तगो मस्तु नादौ संसाञ्च रापरे १५४
वर्तमानस्स उत्पूर्वस्स्थस्तयोरित्यनोत्परे १५५
इति लोपप्रकरणम् ६

## वैकृतप्रकरणम् ७

अथ वैकृतमाप्नोति पदासम्पूर्वऋृत्वरम् १५६
विसर्गोऽवग्रहेष्वाशीस्सुवर्धू रं परस्स षम् १५७
नकारश्शमियाञ्चोर्ध्वो नैरयन्नार्ध्नुवन्नपि १५८
एवास्मिन्ननड्वानायन् घृणीवान् वारुणानिति १५९
हकारः प्रथमादूर्ध्वस्तत्सस्थानञ्चतुर्थकम् १६०
स्पर्शपूर्वश्शकारश्छं लन्तश्चाप्नोति लोत्तरः १६१
तवर्गश्चटवर्गाद्यौ भजेदन्तोऽन्तमूर्ध्वयोः १६२
नकारो लपरस्तस्य सवर्णमनुनासिकम् १६३
स्पर्शोत्तरो मकारस्तु यवलोत्तर एव च १६४
अनुनासिकमेतेषां सवर्णं प्रतिपद्यते १६५
ज्ञघ्नोत्तरो मकारश्चेदनुस्वारोऽत्र केवलः १६६
द्विमात्र इति विज्ञेयो ह्यन्यधर्मविवर्जितः १६७
इति वैकृतप्रकरणम् ७

## षत्वप्रकरणम् ८

अथेतस्सविसर्गौ षं पदि मह्योहि मो द्यवि १६८
सोदिव्ययं कमूप्रोत्री पूर्वोऽवग्रहपूर्वकः १६९

अ्रसिञ्चन्नसदामापि ह्यनयोरादिपूर्वके  १७०
परि वि प्रति निरर्यध्यभि पूर्वो निहते पदे  १७१
तोर्ध्वो वेस्सुमतिर्माकिरीयुरायुर्नकिर्विदुः  १७२
प्तेसोऽग्निरविदुर्मीढुर्निराभिः पायुभिस्सधिः  १७३
नावर्ण हल्लिमौ मृत्युस्पति कुन्यृतु पन्नयधः १७४
ध्यन्यपूर्वस्सवस्थानमृद्रवत्यप्यवग्रहः  १७५
सन्तानेभ्यः स्पशस्सीतं सप्ताभिस्संमितां स्तनाम्  १७६
सभेयस्सत्वा सस्यायै सक्सनिश्च सनीस्सनि  १७७
न स्तुप् स्तरीस्वरस्पर्धास्फुरं साहस्त्रसारथिः  १७८
ज्योतिरायुश्चतुः पूर्वः स्तो प्रतिप्रसवस्त्विति  १७९
टन्तो वाघाषपूर्वष्षात्थाकारश्चैव ठं भजेत्  १८०
विद्वांस्तांस्त्रीनृतून् लोकांस्तर्हांस्तस्मिन् पितृननान्  १८१
युष्मानूर्ध्वानश्मन् कृरावन् कपालानम्बकानपि  १८२
तिष्ठन्नाद्युच्चके नेमिर्देवांश्चेत्सवने पशून्  १८३
नकारः प्राकृतश्चैषु नित्यतोर्ध्वस्समाप्नुयात्  १८४
इति षत्वप्रकरणम्  ८

णत्वप्रकरणम्  ९

अ्रथैति नो णमस्थूरि षु ग्रामोरु समिन्द्र वाः  १८५
धिसुवस्त्रिटपूर्वो निष्पूर्वो हन्योप्यमान च  १८६
पारी परि प्र पूर्वश्च तदवर्णव्यवेतकः  १८७
प्राधो वन्नुह्यमानोऽयन् यानं यवेन वाहनः  १८८
षुम्नान्योऽनित्यषत्वस्थ इन्द्रोऽध एनमत्र च  १८९
केनेत्यत्रायजुः पूर्वो नृश्रीपूर्वो मना अ्रपि  १९०
अ्रङ्गानां ग्यानि गान्योने गानां यामेन षराण च  १९१
रषः पूर्वो हवन्यन्हे हन्नुपूर्वो मयान्यनी १९२
न नूनं नृत्य नह्यत्यन्वान्यशब्दे न्य उच्चकः  १९३

नकारो द्वित्वगो लक्ष्यात्तकारोर्ध्वोऽपि वान्तगः १९४
उत्तमं प्रथमोऽन्त्योर्ध्वस्तृतीयं घोषवत्परः १९५
अन्तोऽचि वा सवर्गीयं ककुदन्त्यश्च मोत्तरः १९६
इति णत्वप्रकरणम् ९

रेफप्रकरणम् १०

अथ विसर्ग आप्नोति रेफमज्घोषवत्परः १९७
ह्वारेष्टरबिभर्वाहारनन्तस्सवितस्त्वकः १९८
अजीगश्शमितस्त्वष्टः प्रातश्चाहरहस्त्वभाः १९९
नेष्टर्यष्टर्विवर्वस्तस्सनुतस्तनुतः पुनः २००
स्तोतर्होतः पितर्म्मातः करावरनुदात्तयोः २०१
आवृत्परोऽयमित्यूर्ध्वश्चानाद्युच्चेऽन्तरेव हि २०२
अनिङ्ग्यान्तास्सुवश्चाहास्त्वहर्नभ्यां भिरुत्तरः २०३
रेफोर्ध्वो लुप्यते रेफस्तत्पूर्वो दीर्घमाप्नुयात् २०४
द्वन्द्वेऽहो रात्परे ओत्वं याति रोर्ध्वे सुवस्त्वपि २०५
अःकारश्च त्वकारोर्ध्वो घोषवत्पर एव वा २०६
इति रेफप्रकरणम् १०

विसर्जनीयसन्धिप्रकरणम् ११

क ख पे षं तथावर्णा पूर्वस्संयात्यवग्रहः २०७
अत्र देवरिषश्चाविर्निरिडश्शश्वतोऽपसः २०८
विश्वतोंऽहसोऽतिदिवोऽप्यश्मनस्तमसस्त्विति २०९
स क्र घान्योत्तरः पिन्व पथे कृध्युत्तरस्तथा २१०
पत्नीवे पतिशब्दे द्विः पुत्पर्यूर्ध्वे दिवोहसः २११
वसुष्कोर्ध्वश्च रायस्पोपरो नमस्करोपरः २१२
नाध्वरं विश्वतोऽन्तश्च पुनस्तु विविशुः परुः २१३
जातोऽत्र धषवत्यूर्ध्वे परि वा प्रोत्तरे ननिः २१४

लुप्यते संयुतोष्मोर्ध्वोऽप्यवर्णाद्घोषवत्परः २१५
ऊष्माणामप्यघोषोद्ध्र्वस्तस्य सस्थानमाप्नुयात् २१६
जिह्वामूलीयमाप्नोति उपध्मानीयमेव वा २१७
कखे पफे परे न द्वे अवर्णाद्यत्वमच्परे २१८
इति विसर्जनीयसन्धिप्रकरणम् ११

यत्वप्रकरणम् १२
ग्रहे हिरण्यवर्णीये पृष्ठये याज्योरुव्ययोरपि २१९
नित्याचिनो यमात्पूर्वमीदूत्पूर्वोऽन्त एति रम् २२०
सोमान्यपूर्वन्दुर्यांस्तु मर्त्यान् पोषान्वशानरान् २२१
मधुमानविमान् गोमान्अमित्रानमृतान्महान् २२२
सो अस्मान् हविष्मान् कक्षीवानिडावांश्च बाणवान् २२३
चिकित्वान् हिपयस्वांश्च विदत्रानुदयान् हि यम् २२४
इन्द्रोमाचोढ्वमीडेन्यान् अप्येत्वकुर्वतादुहत् २२५
अधरान्त्सर्त्वगन्माकरग्रेऽलञ्चादितिः परः २२६
नार्चान् पतङ्गान् यजीयान् समानांश्च तथा यमान् २२७
रश्मीन् हि श्रपयांश्चात्र पदञ्चेदुदथा परः २२८
उक्तौ विधिनिषेधौ च यत्वरत्वे स्वरे परे २२९
विलोमेऽप्येव तौ ज्ञेयौ प्रकृतौ नैव नो हलि २३०
अयवावेदोदायावावैत्वमौत्वं स्वरेऽनति २३१
तत्तस्मादयुतादुत्वात्स्वकालाद्वः पदात्परः २३२
यमिवर्णोऽसवर्णे वमुन्नश्येती मिथुन्यचि २३३
यकारोऽवर्णपूर्वोऽचि ह्यादेशो यदि लुप्यते २३४
न प्लुते प्रग्रहे सन्धिविधिर्यत्वे तु लुप्तके २३५
रोष्मभावात्तु नात्पूर्वं लुप्तान्माच्च तदुत्तरात् २३६
नकाराद्याकृतेर्लुप्तादनुस्वारागमो भवेत् २३७
अनुस्वारो यजुष्येवमध्यायेऽपि यदा भवेत् २३८

तदा गकारसंयुक्तो न शान्तिश्शासरूपरः २३९
इति यत्व प्रकरणम् १२

अच्सन्धिप्रकरणम् १३
अथ स्वरावुभावेकमाप्नुतोऽच्सन्धिरुच्यते २४०
आद्यष्टसु सवर्णोद्धर्वे दीर्घमप्लुतपूर्वके २४१
अथात्रावर्णपूर्वे तावेत्वञ्चेवर्ण उत्तरे २४२
उ वर्णोत्तर ओत्वञ्च ऐत्वमेदैत्परे तथा २४३
औत्वमोदौत्परेऽरमृत्यारं प्रोपावपूर्वके २४४
न स्वधा मा प्रपास्यूर्ध्व आपूषाज्या प्रबुध्निया २४५
अमिनन्त स्वपाठेऽचि पदं मानो यदाषुसाम् २४६
ओष्ठेतनेव एष्टश्चेदेमन्नोद्यन्परं पदम् २४७
इति अच्सन्धिप्रकरणम् १३

अनैक्यप्रकरणम् १४
एदोत्पूर्वेऽयकारोद्धर्व एकं पूर्वसमन्वितः २४८
अथ प्राकृत उख्येयुर्याज्या द्रापे हिरण्यव २४९
धाता जुष्टो विकर्षोऽग्निर्मूर्धाविहव्येयमे नमः २५०
वाजपेय महापृष्ठ्येश्योनायोप ध्रुवद्धितिः २५१
तेष्वहन्यनिष्ट्रवद्यादवन्त्वसंहसोंऽहतिः २५२
अन्वापस्त्वो वातोऽर्मासो मर्तो दत्ते रथस्त्वधः २५३
वातः पूर्वोऽभिवापश्च अपः पूर्वोऽगमत्त्वनु २५४
आपः पूर्वोऽद्भिरस्मांश्चेदपान्न पात्तथैव च २५५
अदूद्धर्वोऽस्मान् स इन्द्रोऽधस्तेऽधोऽग्नेऽन्धोंऽशुरद्य च २५६
ग्न्यूद्धर्व आविन्नस्सोमोऽधोमेऽधोऽग्नेऽस्याश्विनापरा २५७
नः पूर्वोऽघाद्यपथ्यस्मिन्नसदभ्यग्निरन्तमः २५८
नमः पूर्वोऽग्रियाग्रे त्वश्वेभ्यश्चेतरत्र तु २५९

धीरासोऽदब्धासोऽषाढ एकादशास एव च २६०
ऋषीणां पुत्रश्शार्याते पृथिवी यज्ञ एव च २६१
पितार आसते ये गो समिद्ध ऋषभः पुवः २६२
युवयोर्यो गृह्णाम्यग्रे जज्ञे वानेष एव च २६३
पतिर्वः पृष्ठे संस्फानश्शुष्मो वृष्णो वचस्तथा २६४
वर्षिष्ठे जुषाणः पाथो यो रुद्रः पूर्व इत्यपि २६५
अरतिमस्य यज्ञस्य त्वतिद्रुतोऽतियन्ति च २६६
अविष्यन्ननमीवश्च अन्नेष्वर्चिस्तथानृणः २६७
अप्सु योऽज्यानिमर्वन्तमजीतानन्हियास्तथा २६८
अम्बाल्यस्त्वङ्गिरोऽङ्गे च अस्कभायत्तथा कृणोत् २६९
अश्वसनिरशिश्रेद्ध अच्युतोऽस्थभिरघ्निय २७०
अध्वर स्वर ऊद्ध्वे चेदेष्वकरस्स्वभावतः २७१

इति अनैक्यप्रकरणम् १४

## ऐक्यप्रकरणम् १५

अथैतद्विषयेष्वेकमेदोदितस्त्वसीति च २७२
न गर्भश्च यमोनद्धो भद्रः पूर्वस्त्वसीति च २७३
यवनहेष्वजूर्ध्वेषु ग्नजोर्ध्वोऽकार उच्चकः २७४
मो वचस्स्थे दधानोऽधो अग्नेत्यकार ऐक्यतः २७५
अभ्यावर्तिन्नभिद्रोहमधाय्यपि दधामि च २७६
अदितिश्शर्माग्नेर्जिह्वामग्नयः पप्रयोऽरथाः २७७
अद्यान्वस्माकमरिष्टा अश्माश्वाश्रुतिरव्यथ २७८
अस्मत्पाशानस्मिन् यज्ञे अङ्गिरस्वदथो अदः २७९
अस्तास्मेधत्त चादुग्धा अर्चन्त्यत्रस्थचार्यमन् २८०
अन्तरस्याममापूपमश्यामान्नाय चाकरम् २८१
गाहमानो जायमानो मन्यमानस्स्त्रिधोऽग्नयः २८२
तपसो भामितो धावः स्पतिभ्यो हेतयः पते २८३

आयोऽध्वर्यो क्रतोऽधश्चेन्नान्य प्रग्रह पूर्वकः २८४
ग्रन्थान्तरेऽप्यनार्षेऽयं स्वेच्छया वर्तते त्विति २८५
इति ऐक्यप्रकरणम् १५

स्वरधर्मस्वरूपप्रकरणम् १६

वर्णानां कारणं वेद उदात्तादिस्वरास्ततः २८६
तेषां तत्स्वरसन्धेश्च लक्षणं कथ्यतेऽधुना २८७
उदात्तोच्चारणे तस्य देहदैर्घ्यं भवेद्यतः २८८
उच्चारणेऽनुदात्तस्य देहस्य ह्रस्वता भवेत् २८९
भवेत्तत्र समाहारः स्वरितश्चोच्चनीचयोः २९०
प्रचयश्च बुधैः प्रोक्त उदात्तश्रुतिरित्यपि २९१
स्वारश्शीर्षे मुखेऽप्युच्चप्रचयौ निहतो हृदि २९२
नीचोच्चस्वारप्रचयाः क्रमाज्ज्ञेयाः प्रजापतौ २९३
इति स्वरधर्मस्वरूपप्रकरणम् १६

स्वरसन्धिप्रकरणम् १७

मध्यस्थ एकनीचोऽतिप्रयत्नो विक्रमो भवेत् २९४
उच्चसन्धिर्भवेदुच्चः स्वरितः स्वारनीचयोः २९५
नीचोर्ध्वाकारसम्मिश्र उच्च एङ स्वरितो भवेत् २९६
अत्राभिनिहितश्चायमिति संज्ञायते बुधैः २९७
यवत्वे ह्युच्चयोर्यत्र इवर्णोकारयोरपि २९८
परतः स्वर्यते नीचः स्वरितः क्षैप्र उच्यते २९९
उच्चोत्वान्नीच उत्वे स्यात्प्रश्लिष्टस्सन्धितो यमः ३००
अखण्डे सयवो नित्यो नीचपूर्वः स्वयञ्च वा ३०१
स्थितस्वारस्य चान्त्योऽणुर्नीचः स्यात्प्रवणोत्तरे ३०२
स्वरद्वयस्य चैकस्मिन् कम्पसंज्ञास्ति दीर्घता ३०३
क्षैप्रकम्पश्चतुर्धैवमादूदेदैद्भिरुच्यते ३०४

प्रश्लिष्टो नित्य ऊदाद्यामेङाभिनिहतस्स्मृतः ३०५
उच्चोद्ध्र्वौ यददीव्यादि त्रिके न कञ्चनेति च ३०६
उच्चकम्पौ स्थितेङ्गरूपौ स्वाराः कम्पाश्च सांहिताः ३०७
उच्चादुत्तरतो नीचः स्वरितं प्रतिपद्यते ३०८
स्वारोऽयं प्रचयश्चैव नोदात्तस्वरितोत्तरे ३०९
स्वारादुपरि नीचानां प्रचयः परिकीर्तितः ३१०
यस्समानपदे स्वारस्तैरोव्यञ्जन उच्यते ३११
पादवृत्तस्तयोर्व्यक्तावन्यः प्रातिहतस्स्मृतः ३१२
नित्योऽत्युच्चनीचः क्षैप्रस्तत्समो न्यूनतः परः ३१३
दृढतरप्रयत्नस्स्यान्नित्ये क्षैप्रे च वा दृढः ३१४
प्रश्लिष्टे चाभिनिहते मृदुता स्वल्पतान्यतः ३१५
नादानुस्वारयोः पूर्वस्स्वारभागुच्चवत्स्थितः ३१६
स्वर्येतेऽस्मात्परावेव नादानुस्वारकावपि ३१७
भक्तिस्वारात्तदङ्गानज् घृतवदृपरे च रः ३१८
आयपूर्वेऽथ चोच्चः स्याद्भक्तेर्नीचो डधू अधः ३१९
स्वारश्चारण्यके भक्तेरत्र शीर्षं स्त्रपूर्वके ३२०
स्वर्यते चादितो ह्रस्वो दीर्घमध्यं तथैव च ३२१
संयुतोद्ध्र्वे तु दीर्घश्चेदन्त्यस्वारो भवेत्तदा ३२२
ऋकारोत्तररेफोद्ध्र्वेऽवसाने दीर्घ एव च ३२३
यो जटामात्रविद्ब्रह्मसन्धिज्ञो विष्णुरुच्यते ३२४
ईश्वरस्सर्वसन्धिज्ञ इत्येवर्षिभिरीरितः ३२५

इति स्वरसन्धिप्रकरणम् १७

## हस्तस्वरविन्यासप्रकरणम् १८

कनिष्ठानामिकामध्या तर्जनीषूत्तमे करे ३२६
नीचस्वारधृतोदात्तानङ्गुष्ठाग्रेण निर्दिशेत् ३२७
आद्यन्तमध्यामध्यासु तद्रेखासु च तान् क्रमात् ३२८

पृथक् तदङ्गुलिस्थानं भक्तेर्यस्स्वर उच्यते ३२९
स्वारमुच्चमिवोर्ध्वञ्च ह्यनामिकान्तरान्त्ययोः ३३०
स्वारकम्पे स्वरावेतावनामिकोत्तमाद्ययोः ३३१
निर्दिशेदुच्चकम्पे च तर्जनीमध्यमाद्ययोः ३३२
विरामे व्यञ्जनस्यैव पृथक्स्थानं न विद्यते ३३३
एवं हस्तस्वरन्यासे कथितश्च विनिर्णयः ३३४
सुहस्तस्वरविन्यासान्निर्मलाध्ययनं भवेत् ३३५
तत्पूतो ब्राह्मणो यस्तु ब्रह्मणा सह मोदते ३३६

इति हस्तस्वरविन्यासप्रकरणम् १८

## द्वित्वप्रकरणम् १९

स्वरपूर्व इयाद्द्वित्वं व्यञ्जनं व्यञ्जनोत्तरे ३३७
लपूर्वे च वपूर्वे च द्वित्वं स्पर्श उपाप्नुयात् ३३८
अच्पूर्वाद्रादियाद् द्वित्वं वर्णमात्रोदये च हल् ३३९
ह्रस्वादन्तौ नङौ द्वित्वमाप्नुतो ह्यच्परावपि ३४०
ह्रस्वाद् द्वित्वमनुस्वारः प्राप्नुयात्संयुते परे ३४१
तदनुस्वारपूर्वश्च संयोगादिर्द्विरुच्यते ३४२

इति द्वित्वप्रकरणम् १९

## पूर्वागमप्रकरणम् २०

व्यञ्जनं यन्निमित्तेन द्विवर्णमिति वर्णितम् ३४३
द्वितीयतुर्ययोस्तेन भवेत्पूर्वागमस्त्विह ३४४
धामाननूपसर्गाश्च भूते थ एष आति च ३४५
परमैभ्यः पराः पूर्वञ्छखि भुजा इयुस्तथा ३४६
समाने स्वरयोर्मध्ये लक्ष्याद्द्वित्वं हलः क्वचित् ३४७
द्वितीयस्य चतुर्थस्य तथा पूर्वागमस्स्मृतः ३४८
काठके तु पृणच्छिद्रञ्छकारः पूर्वमाप्नुयात् ३४९

शात्तैत्तिरीयके नस्य ज्ञो भवेत्काठके न चेत् ३५०
हकारान्योष्मणः स्पर्श उत्तरे सकृदेव हि ३५१
तन्मध्ये प्रथमः स्यात्तत्स्पर्शसस्थान आगमः ३५२
ङकारादेव चानन्त्यात्तपरे धपरे सति ३५३
ककारश्च गकारश्चेत्यागमस्स्याद्यथाक्रमम् ३५४
यत्रोष्माविकृते स्पर्शादुत्तमोर्ध्वेत्वनुत्तमात् ३५५
आनुपूर्व्याद्यमानेतान्वर्णयन्त्यागमान् बुधाः ३५६
ऊष्मोत्तरे द्वितीयः स्यादादेशः प्रथमस्य तु ३५७
ह्रस्वादिद्विरूपवन्नादो यद्येनं सकृदुच्चरेत् ३५८
इति पूर्वागमप्रकरणम् २०

द्वित्वनिषेधप्रकरणम् २१

अथैतस्य प्रसक्तस्य प्रतिषेधस्तु कथ्यते ३५९
ईदैत्पूर्वो यकारश्च विसर्गो रेफ एव च ३६०
प्रथमोद्धर्वेऽच्परे चोष्मा वकारस्स्पर्श उत्तरे ३६१
ऊष्मस्पर्शपरस्थे तु लकारश्च तथैव हि ३६२
वर्गीयानुत्तमोद्धर्वे हल् सवर्णोत्तर एव वा ३६३
यवहेषु परस्थेषु नकारश्चान्तगस्त्विति ३६४
नस्यान्तगस्य दीर्घात्तु यवहे हे च हल् परे ३६५
पैरेरेभिर्हि तस्यैव न स्यात्संयुतता तथा ३६६
स्वरायुक्तस्य वर्णस्य वाचकं नाम कथ्यते ३६७
वर्णक्रमोक्तिकाले तु नान्यसंज्ञां समुच्चरेत् ३६८
सर्ववर्णान्वदन्त्येवं ज्ञातौ द्वित्वागमौ न तु ३६९
ततोऽफलं फलं प्रोक्तं द्वित्वाद्युच्चारणाद्बुधैः ३७०
इति द्वित्वनिषेधप्रकरणम् २१

## अङ्गसंहिताप्रकरणम्  २२

स्वराणां पूर्वतश्चैव ह्युदात्तादिस्वराः स्मृताः  ३७१
व्यञ्जनानां तदाप्त्यर्थमङ्गताद्य विधीयते  ३७२
परस्य व्यञ्जनञ्चाङ्गं पूर्वस्याचोऽवसानगम्  ३७३
ऋकारे परभूते च रेफः पूर्वाङ्गतामियात्  ३७४
अनुस्वारो विसर्गश्च स्वरभक्तिरसंयुतः  ३७५
योगादि च परायुक्तं पूर्वस्याङ्गं तथा स्मृतम्  ३७६
न पूर्वाङ्गं भवेत्स्पर्श ऊष्मणो विकृतिर्यदि  ३७७
पराङ्गं प्रचयाद्भक्तिः प्रचयेत्वृपरे च रः  ३७८
अन्तस्थोदयमङ्गं स्यादसवर्णं परस्य च  ३७९
ऊष्मण्यूद्ध्र्वे पराङ्गे तु स्पर्शश्चैव यमास्त्विति  ३८०

इति अङ्गसंहिताप्रकरनम्  २२

## स्वरभक्तिप्रकरणम्  २३

स्वरोद्ध्र्वोष्मणि रेफस्य लस्यापि स्वरभक्तिता  ३८१
तन्मध्ये ऋत्वलृत्वे च स्वरभक्तिं प्रकल्पयेत्  ३८२
हपरे तु हलन्ता स्यात्स्वरभक्तिस्तु संवृता  ३८३
अजन्ता शषसोद्ध्र्वे च विवृता समुदीरिता  ३८४
स्वरभक्तिः करेणू रो होद्ध्र्वो लः कर्विणी भवेत्  ३८५
हरिणी शषसोर्ध्वो रो लकारो हारितोच्यते  ३८६
दीर्घात्स्वारादनन्त्या च स्वाराद्भक्तिः पृथग्भवेत्  ३८७
प्रत्येकस्वरभाग्यश्च न भक्तिर्निहते च हे  ३८८

इति स्वरभक्तिप्रकरणम्  २३

## स्थानकरणप्रयत्नप्रकरणम्  २४

वायौ चरत्युरस्यन्तर्मन्द्र उद्भवति ध्वनिः  ३८९
कण्ठे च मध्यमो ज्ञेयः शीर्षे तारः स्वशक्तितः  ३९०

उच्चार्यते त्रिभिस्तैस्तु यावदध्ययनं क्रमात् ३९१
नादः श्वासो हकारार्कौ कण्ठेऽल्पे विवृतेऽधिके ३९२
अज्घोषा नादतो जाता हचतुर्था हकारजाः ३९३
प्रथमाः श्वासतोऽन्येऽर्कादघोषाश्च ततो यमाः ३९४
कण्ठो वक्त्रादिमध्यान्तं दन्तमूलान्तनासिकम् ३९५
ताल्वोष्ठमुरः स्थानानि वर्णानां करणान्यधः ३९६
उवर्णप्रकृतेरोष्ठौ दीर्घौ स्त औत्परस्य ३९७
अव्यञ्जनस्वराणाञ्चादौ कण्ठ इतीरितः ३९८
ओष्ठताल्ववर्णेवर्णे व्यस्तसंवृतमैत्यपि ३९९
औति चोष्ठौ स्त ओत्यल्पाधिकावेत्योष्ठतालु च ४००
कवर्गादिषु जिह्वादिमध्यान्तोष्ठेन चोपरि ४०१
टवर्गे वक्त्रमध्ये ळे जिह्वाग्रेणोपरि स्पृशेत् ४०२
मध्यान्ताभ्याञ्च तालौ ये रेफे जिह्वाग्रमध्यतः ४०३
लकारे दन्तमूलेषु जिह्वाग्रेणोपरि स्पृशेत् ४०४
वे चोष्ठान्तेन दन्तेषु स्पर्शस्थाना य ऊष्मकाः ४०५
हकारश्च विसर्गश्च कण्ठस्थानावितीरितौ ४०६
प्रयत्नश्चोष्मणां व्यस्त इणोऽन्येषामचां भवेत् ४०७
केवलानाञ्च सर्वेषामत्यल्पस्पृष्टता स्मृता ४०८
स्पृष्टत्वं स्पर्शसंज्ञानां परेषां किञ्चिदुच्यते ४०९
अतिस्पृष्टो द्वितीयेषु चतुर्थेषु च तत्समः ४१०
हकारं तत्र नासिक्यमुत्तमोत्तरमेव च ४११
अन्तस्यापरमित्यत्र उरस्यञ्च विदुर्बुधाः ४१२
विज्ञेया नित्यनासिक्या यमानुस्वारपञ्चमाः ४१३
अजन्तस्था हकारश्च निमित्तेन तु कीर्तिताः ४१४

इति स्थानकरणप्रयत्नप्रकरणम् २४

## प्लुतप्रकरणम् २५

अकारान्तः प्लुतो यश्चेदनुनासिक उच्यते ४१५
अमत्रध्वनितुल्यश्च रङ्गसंज्ञ इतीर्यते ४१६
श्लोकाँ गलाँ ममाँ हूताँ यद्घ्राँ एवेति च प्लुताः ४१७
दीर्घा देवाँ उ ताँ इम्यमृवाँ अ स्वाँ अहं कठे ४१८
पत्नीवाश्चेतव्याः कार्याश्चित्यारभ्याः प ता उ च ४१९
होतव्यां सत्यराजांश्च सृज्यां प्राश्यांश्च मीयताम् ४२०
कर्तव्या सहस्रामद्राक्सोमाः क्रामाश्च हा इति ४२१
ब्रह्मान् त्वं द्विपदां हौषां स्थेया अग्ना इवत्यगान् ४२२
हावरत्नीश्छिनत्ती च जुहवानी च गच्छती ४२३
एती लाजीञ्छाचीन् सर्वे त्वन्तोदात्ता ऽ प्लुता इमे ४२४
पत्या इति गृहा इ त्वी उत्ताना इत्यवेरपाः ४२५
सोमपा असोमपा द्वावश्नुता उवतिष्ठिपाय् ४२६
सावित्रान्न वेत्थाद्वौ व्यमग्निहोत्रान्न चेति च ४२७
अवेत्योवभृथा ना द्वौ रभ्यः पशूश्शृतं हवीः ४२८
स्थेयोऽग्नीर्धस्विदासीद्द्वावस्तु ही इव विन्दती ४२९
नकं त्रिपञ्चाशदूर्ध्वं चतुर्णां दशमाः प्लुताः ४३०
नवदशाज्झलो ळश्चाप्यनुस्वारौ विसर्गजौ ४३१
चतुर्भक्तियमाश्चेति वर्णाष्षट्षष्टिरीरिताः ४३२
इति प्लुतप्रकरणम् २५

## ओष्ठ्यप्रकरणम् २६

मध्ये वकारेऽनुस्वारे विरामे संयुते स्थिते ४३३
अप्यौकारे परे व्यक्तौ द्विरोष्ठ्याविति निश्चितौ ४३४
संयुतश्चोष्ठ्यमध्ये हो विसर्गादुत्तरश्च पः ४३५
तालुभ्यां वायुमापूर्य माण्डूकोष्ठ्यः परस्स्मृतः ४३६
स्पर्शयोस्संयुते यत्र पाठे चावसरे यदि ४३७

आदेरीषच्छ्रुतिर्ज्ञेया विरामे मस्य चैव हि ४३८
विरामे वर्ग्यपूर्वस्य प्रयत्नः क्रियते पृथक् ४३९
ओमः पवर्ग ऊर्द्ध्वे च न प्रयत्नः पृथक्तथा ४४०
इति ओष्ठ्यप्रकरणम् २६

## कालनिर्णयप्रकरणम् २७

चाषोक्त एकमात्रस्स्याद्वायसेन द्विमात्रिकः ४४१
मयूरेण त्रिमात्रश्च जानीयात्काललक्षणम् ४४२
कालोऽतिसूक्ष्मकोऽणुः स्यान्मात्रार्द्धं व्यक्तमात्रिकम् ४४३
अङ्गुलिस्फोटनं यावान् तावान् कालस्तु मात्रिकः ४४४
हल्युक्तं हलुत्तरं तदणुमात्रं प्रकीर्तितम् ४४५
विरामे वर्णयोर्मध्ये ह्यणुकालोऽप्यसंयुते ४४६
हलो भक्तिर्विसर्गोऽन्तो ह्रस्वान्नो यवहोत्तरः ४४७
स्पर्शोद्ध्वों वोऽर्धमात्रास्तेऽवसाने लस्त्रिपादता ४४८
विसर्गान्तेऽर्धमात्रस्स्याद्विरामः क्षपरेऽपि च ४४९
संयुतोद्ध्वें च पूर्वत्र द्विरोष्ठ्येऽप्यौवयोस्तथा ४५०
पिपीलिका दीर्घसमे च मध्यमा सवर्णता पाकवती पदैक्ये ४५१
दृष्टाचिवत्सानुसृतिस्त्वसाम्येऽप्यधोऽणुमुख्यास्तु विरामकालाः ४५२
स्वरोदये त्वनुस्वारो भवेदध्यणुमात्रिकः ४५३
विरामश्च तयोर्मध्ये वैशेषिका विदीर्घयोः ४५४
प्रणवान्ते पवर्गोद्ध्वेंऽवग्रहस्यान्त एव च ४५५
वाक्यान्ते तु विरामश्च सार्धमात्रः प्रकीर्तितः ४५६
पदप्रणवयोर्नित्यं विरामस्स्याद्द्विमात्रिकः ४५७
द्रताद्धल् स्वरसम्बन्धे तयोस्तत्स्वरकालवत् ४५८
अनुस्वारो द्विमात्रस्स्याद्रेफोष्मसु परेषु च ४५९
संयुतोत्तर इत्येष एकमात्रः प्रकीर्तितः ४६०
स्यातां सोर्ध्व खथोर्ध्वे च ङनौ ह्रस्वाद्द्विमात्रिकौ ४६१

षपरा नित्यखथोर्ध्वे हकारे हल्परे तथा  ४६२
असंयुतश्च नो दीर्घान्मात्रिको यवहोत्तरे  ४६३
ह्रस्वान्नादो द्विमात्रस्स्यादन्यत्राप्येकमात्रिकः  ४६४
केवलप्रणवे तु स्यात्स्वरस्सार्द्धद्विमात्रिकः  ४६५
मकारान्तो यजुष्युच्चस्स्वरिता ओन्तदादिषट्  ४६६
अजेकद्वित्रिमात्रास्त्रिरेको द्विश्चैकगो द्विगाः  ४६७
त्रिमात्रत्वं विरामस्य ऋगन्तेऽर्धान्त एव च  ४६८
होता यक्षदिति त्वन्ते देवं बर्हिश्च पञ्चमे  ४६९
सहाम्भसि पितृप्रश्न ऋक्स्याद्वाङ निधनेन चेत्  ४७०
काण्डप्रश्नानुवाकान्ते दशाष्टपञ्च मात्रिकाः  ४७१
ग्रन्थानां परिपूर्णे तु त्रिगुणः काल उच्यते  ४७२
ह्रस्वस्स्यादेकमात्रस्य द्विमात्रस्य तु दीर्घता  ४७३
त्रिमात्रस्य प्लुतोऽचां हि पादो मात्राचतुर्थकः  ४७४
शीघ्रं विलम्बितं मध्यं तिस्रो वाक्यस्य वृत्तयः  ४७५
कालान्यता च यद्वृत्तौ तदा कर्मान्यता भवेत्  ४७६
प्रयत्नात्कालतश्चोक्तास्तद्वर्णा उद्भवन्ति हि  ४७७
तदभावे वर्णाभावस्सम्यग्ज्ञेयं द्वयं ततः  ४७८
मध्यमां वृत्तिमाश्रित्य चैवं कालास्सुनिश्चिताः  ४७९
प्रातिशाख्यादिषु ह्यत्र वृत्तिस्सैव समाश्रिता  ४८०
इति कालनिर्णयप्रकरणम्  २७

## उच्चारणफलप्रकरणम्  २८

न विश्रमश्चैकपदे प्रोन्यानिस्सुविसम्परम्  ४८१
च न ह्युवा स्म ह त्वीं वैन्वेतेभ्योऽधश्च कूटतः  ४८२
व श्रीर्दैघधया उच्चास्स्थापितव्यास्स्वरं गताः  ४८३
नैवं तृतीयसम्बन्धाः प्रयोगान्तर इत्यपि  ४८४
युक्तोर्ध्वं व्यञ्जनान्तञ्च दीर्घं गुर्वितरल्लघु  ४८५

तत्त्रिस्त्रिरक्षराश्चैव गणा इति बुधैस्स्मृताः ४८६
त्रिलो नः स्वस्त्रिगुरुर्मो भूरादौ केन्द्रू यभौ शुभम् ४८७
द्यौस्तोऽन्ते सोऽनिलस्तापं मध्येऽग्न्यर्कौ रजौ क्रमात् ४८८
अदादेत्प्रथमयषा लूनासिक्याः क्षशोत्तराः ४८९
अनिलाग्निमहीन्द्वर्काः पञ्चानां त्वधिदेवताः ४९०
ब्रह्मजातिर्भवेदुच्चः क्षत्रजातिस्तु नीचकः ४९१
वैश्यजातिर्भवेत्स्वारश्शूद्रस्तु प्रचयस्स्मृतः ४९२
उदात्तस्सात्विकः प्रोक्तस्स्वरितो राजसस्स्मृतः ४९३
निहतप्रचयावेतौ तामसौ तु विदुर्बुधाः ४९४
स्वराश्च प्रथमाश्चैव द्वितीया ब्रह्मजातयः ४९५
तृतीयाश्च चतुर्थाश्च क्षत्रजातय ईरिताः ४९६
उत्तमाश्चैव मन्तस्था वैश्या हि परिकीर्तिताः ४९७
अनुस्वारो विसर्गश्च ह्यूष्माणोऽवरजास्स्मृताः ४९८
यदन्यजातिरुच्यते तत्तत्संहारको भवेत् ४९९
यज्जात्युच्चारणे तेषां तज्जातिपरिरक्षणम् ५००
वर्णोच्चारण इत्यत्र समग्रं लक्षणं स्मृतम् ५०१
न्यूनातिरेकराहित्यं ब्रह्म भक्तिर्यथोच्चरेत् ५०२
सुव्यक्तस्सुस्वरो धैर्यं तच्चित्तत्वं चतुर्गुणाः ५०३
एतद्युक्तः पठेद्वेदं स वेदफलमश्नुते ५०४
अध्यायस्य मुखे चान्ते भूत्वा विद्वानतन्द्रितः ५०५
संरक्षणाय वेदानामोङ्कारं तूच्चरेत्सदा ५०६
स्रवत्यादावनुक्ते च तस्यान्ते तु विशीर्यते ५०७
आद्यन्तप्रणवौ तस्य स्यातामङ्गानि वै ततः ५०८
संहितापदसन्धीनां वर्णानां लक्षणान्त्वपि ५०९
छन्द आदीनि शास्त्राणि ह्युपाङ्गानि विदुर्बुधाः ५१०
ध्वनिः स्थानञ्च करणं प्रयत्नः कालता स्वरः ५११
देवता जातिरेतैश्च वर्णा ज्ञेया विचक्षणैः ५१२

यजुर्वेदः पिङ्गलाक्षः कृशमध्यो बृहद्गलः ५१३
बृहत्कपोलः कृष्णाङ्घ्रिस्ताम्रः काश्यपगोत्रजः ५१४
लक्षणेन विनाध्यायं यः पठेदपि सर्वदा ५१५
नैव तत्फलमाप्नोति स विप्रस्सुजनोऽपि हि ५१६
संहितापदवर्णानां कालादीनाञ्च लक्षणम् ५१७
हल् विसर्गाच्स्वराणाञ्च सन्धेर्लक्षणमेव च ५१८
एतानि सम्यगष्टौ च विदित्वा लक्षणानि यः ५१९
अध्यायं स पठत्येव द्वितीयं ब्रह्म कथ्यते ५२०
संहिताञ्च पदं वापि क्रमञ्चैव जटां पठन् ५२१
लक्षणज्ञस्तदाप्नोति ब्रह्मज्ञानं हि शाश्वतम् ५२२
वेदामृतं पिबेद्यस्तु स तस्माद्भूसुरो भवेत् ५२३
एवञ्च व्यासशिक्षाविद्भूसुरेन्द्रस्स कथ्यते ५२४
श्रीमत्परब्रह्मसुपूर्णचित्तश्रीव्यासकण्ठप्रसृताञ्च शिक्षाम्
एतामभिज्ञः प्रयतः पठेद्यस्सर्वानभीष्टांश्च समश्नुते वै ५२५

इति उच्चारणफलप्रकरणम् २८

समाप्तोऽयं ग्रन्थः